यश्चैवंविधो राजते इत्येवंशीलो राजा—शोभनः एवंविधः कायः—शरीरं यस्य सः शाकस्तस्मात् विशेषणस्य परनिपातः, तथा च नवह स्तकमयराजेतिसंपर्व तेनाङ्कितः चिह्नीकृतोऽर्थात् श्रीपार्श्वनाथस्तस्य महिम्नः समो महिमा यत्र स तथा तस्मिन्, श्रीपार्श्वनाथराज्यसदृशमहिम्नि श्रीहीरविजयसूरीश्वरराज्ये इत्यर्थः, अथ भावः—श्रीऋषभाद्यपेक्षया हीनकालसमुत्पन्नोऽपि श्रीपार्श्वनाथः सर्व्वजनेष्वादेयनामा यथाऽभूत् न तथा ऋषभादयः, एवं श्रीवज्रस्वाम्याद्यपेक्षया श्रीवीरजन्मनक्षत्रसंक्रान्तभस्मराशिमाहात्म्यात् कलुषकृपाक्षिप्तगुरुत्वेन तथाविधकालोत्पन्नोऽपि श्रीहीरविजयसूरिर्यथा माहात्म्यभाग् न तथा वज्रस्वाम्यादयः, न चैतत् वर्ण्णनमात्रं, किन्तु पारमार्थिकमिति प्रदर्शनाय विशेषणद्वारा हेतुमाह, किंलक्षणे श्रीहीरविजयसूरिगुरुवारे?—'चित्रसितपक्षे' चित्रं—आश्चर्यं यथा स्यात् तथा कुपाक्षिकमुख्यानामपि निजकुपक्षपरित्यागपुरस्सरं सितः श्वेतः शुद्ध इतियावत् पक्षः अंगीकारो यत्र वारके स तथा तस्मिन्, अथ भावः—कुपाक्षिकमुख्यः सपरिकरः ऋषिमेघजीनामा लुंपकमतीयो नगरमुख्येऽहम्मदावादे सकलराजमुख्यमुद्गलाधिपतिपातसाहश्रीअकब्बरसाक्षिकं महामहःपुरस्सरं यथा प्रव्रज्यादिकं प्रतिपेदे न तथा प्राचीनाचार्यराज्येषु, यद्यपि कश्चित् कदाचित् प्रव्रज्यादिकं स्वीकुर्वाणो दृष्टः श्रुतश्च परं तन्मुख्यास्तु उत्कृष्टवृत्त्या श्रीहीरविजयसूरिराज्ये इति चित्रं, एवमपि कुत इति विशेषणद्वारा हेतुमाह, यतः किंलक्षणे श्रीपूज्यवारके?—'गुरुदैवकपूर्णोदये' गुरु—महत् तच्च तद्दैवं च गुरुदैवं, स्वार्थे कः, तस्य पूर्ण्णः—अन्यून उदयस्तीर्थकरनामकर्म्मोदयवत् प्राग्जन्मोपार्जितशुभमहाविपाकानुभवनं यत्र स तथा तस्मिन् गुरुदैवकपूर्णोदये तत्र, न केवलं गुरोरेव पुण्यप्रकृत्युदयः, किन्तु तद्भक्तानामपि, तथा हि—गुरुपक्षे तावत् नहि गुरूणां तथाविधपुण्यप्रकृतिविपाकानुदये कुपाक्षिकजनुपम्याकुलेऽपि काले श्रीस्तम्भतीर्थे प्रभावनासुखेनैव कोटिसंख्यो द्रव्यव्ययः संभवति, तद्भक्तपक्षे तु तथाविधेऽपि काले तद्भक्तानां विधात्रा ज्ञानदर्शनचारित्राणि

पिंडीकृत्य निर्मितैकमूर्त्तीनां श्रीगुरुणां ये भक्ताः श्रावकास्तेषां प्रागूजन्मोपार्जितशुभकर्म्मप्रेरणया भाविन्या च तथाविधभवितव्यतयैव तथाविधभक्त्युल्लासः संभवति, यदागमः—"पुण्णेहिं चोइआ पुरकडेहिं सिरिभायणं भविअसत्ता। गुरुमागमेसिभद्दा देवयमिव पज्जुवासंति ॥१॥"त्ति गाथार्थः ॥६८॥ अथैतत्प्रकरणकर्त्तृनामगर्भितामाशिरमिधायिकां गाथामाह—

**इअ सासणउदयगिरिं जिणभासिअधम्मसायराणुगयं। पाविअ पभासयंतो सहस्सकिरणो जयउ एसो ॥६९॥**

**इय कुवक्खकोसियसहस्सकिरणंमि सिरिहीरविजयसूरिदत्तपवयणपरिक्खावरनामंमि पासचंदमय-निराकरणनामा इक्कारसमो विस्सामो सम्मत्तो ॥ग्रन्थाग्रं १२०५॥**

इति—अमुना प्रकारेण एषोऽध्यक्षसिद्धः सहस्रकिरणः, पदैकदेशे पदसमुदायोपचारात् कुपक्षकौशिकसहस्रकिरणो जयतु—जीयादित्याशीरुपदर्शितेति संबंधः, आशीरपि तत्कृत्योद्भावनपुरस्सरमेव भवति इत्याह, किं कुर्व्वन् जयतु?—प्रभासयन्—प्रकाशं कुर्व्वन्, अर्थात् जीवलोकं,अन्योऽपि सूर्यो जीवलोकं प्रकाशयन्नेवाशीर्भाग् भवति,तथाऽयमपि, प्रकाशमपि किं कृत्वा करोतीत्याह—'सासणे'-त्यादि, शासनं—जैनतीर्थं तद्रूपो य उदयगिरिः—उदयाचलो निषधवर्षधर इतियावत् तं प्राप्य—तच्छिखरमासाद्य, अन्योऽपि सूर्यो निषधशिखरमासाद्य प्रकाशं कुरुते तथाऽयमपि जैनतीर्थं प्राप्यैव प्रकाशयति, नान्यथा, किंलक्षणं शासनोदयगिरिं?—'जिनभाषितधर्म्मसागरानुगतं' जिनेन—अर्हता भाषितो यो दानादिलक्षणो धर्म्मस्तद्रूपो यः सागरः—समुद्रस्तं प्रत्यनुगतः—प्राप्तः संबद्धोऽनुकारी वेत्यर्थः, निषधोऽपि समुद्रसंबद्धो भवति, उभयतोऽपि समुद्रस्पर्शीत्यर्थः, अथवा तदनुकारी समुद्रसदृशः,यथा सूर्यः समुद्रे मंडलानि कुरुते तथैव निषधेऽपि, यदुक्तं—"तेसठ्ठी निसढंमि अ दुन्नि अबाहा दुजोअणंतरिआ। एगुणवीसं च सयं सूरस्स य मंडला

ठवपे ॥१॥" इति, अथ निपथापेक्षया समुद्रे पर्यंस मठलानि भूयांस्तत्र समुद्रोपमयोपमितो निपधः, अत्र धर्मसागर १।८ प्रकरणकर्तुर्नामापि सूचितं बोध्यमिति गाथार्थः ॥६२॥

इतिश्रीमत्तपागणनभोनभोमणिश्रीहीरविजयसूरीश्वरशिष्योपाध्यायश्रीधर्म्मसागरगणिविरचिते
स्वोपज्ञकुपक्षकौशिकसहस्रकिरणे श्रीहीरविजयसूरिदत्तप्रवचनपरीक्षापरनाम्नि प्रकरणे
पाशचन्द्रमतनिराकरणनामैकादशो विश्रामः समाप्तः । समाप्ता च प्रवचनपरीक्षा

मंगलं लेखकानां च, पाठकानां च मंगलम् । मगलं सर्व्वजन्तूनां, भूमिभूपतिर्मंगलम् ॥१॥ अनर्थमावान्मतिविभ्रमेण, यदर्थहीन लिखितं मयाऽत्र । तत्सर्व्वमार्यैः परिशोधनीय, कोपो न कुर्यात् खलु लेखकस्य ॥१॥ परमजैनशासनप्रदीपकश्रीमत्तपागणकमलप्रदीपकश्रीसरस्वतीकण्ठामरणश्रीविश्वजनरंजनपरमधर्म्मोपदेशसहकारवादिमानमर्दनश्रीजैनशासनस्तंभोपकारकसकलवाचकशिरोमणिमहोपाध्यायश्रीश्रीश्रीश्रीश्रीश्रीनेमिसागरलिखापित, सौम्यश्रीचातुर्मासस्थिते सति श्रीरपुरे लिखित, संवत् १६७२ वर्षे कार्तिकवदि ७ सोमे लिखितं नायाकेन, पुण्यार्थे पुस्तकं लिखित, परमचातुरीपित्रा गणेशश्रीभाग्यसागरेण, महताापि आदरेण लिखापित । कस्मिन् कस्मिन् दिवसे लिखितं, पत्रसामान्योऽयं श्रीः ।

प्रंथमलीलिखतुधैः श्रेयोऽर्थं चारु प्रवचनपरीक्षाम् । अचजीश्रेष्ठिवधूः कृतपुण्या नवरंगदेनाम्नी ॥१॥

श्रीगुरुभ्यो नमः ॥

## ॥ प्रवचनपरीक्षाया बीजकं लिख्यते ॥

६ पणमिअ इत्यादिगाथाषट्केन देवगुरुनमस्कारलक्षणं मंगलाचरणं, एतद्वृत्तौ च प्रसंगतो वक्ष्यमाणकुपाक्षिकाणां सामान्यतः स्वरूपेणैतेषां तीर्थबाह्यतापरिज्ञापनम्।

७ 'वीरजिण'त्ति गाथया कुपाक्षिका अभिधेयं, तदुत्पत्तिनिदानादिकं च।

८ 'खवण'त्ति गाथया दशानामप्युत्पत्तिक्रमेण नामानि।

९ 'पढमिल्लुआण'त्ति गाथया कुपाक्षिकाणां तीर्थात्पृथग्भवनं कः कुतो निर्ग्गतः ?।

१० 'तित्थं चाउ'त्ति गाथया तीर्थलक्षणम्।

१२ तित्थयरो इत्यादिगाथाद्विकेन तीर्थकरस्वरूपम्।

१३ 'सुच्च'त्ति गाथया श्रुत्वाकेवली धर्म्मं कथयति नाश्रुत्वाकेवल्यपि, ततस्तीर्थकृदपि श्रवणपरंपरयैव धर्म्मं कथयति इति व्यवस्थापनम्।

१५ 'गब्भे'त्यादि गाथाद्विकेन श्रुत्वा धर्म्मकथनेऽन्वयव्यतिरेकाभ्यां दृष्टांतदर्शनम्।

१६ 'सिद्धांतावि'त्ति गाथया सिद्धांताभ्युपगमेऽवश्यं परंपराऽभ्युपगम्यैव।

१७ एवंविहत्ति गाथया तीर्थकृदपि क्षायिकभावे प्रवर्त्तमानस्तीर्थव्यवस्थापको, नापरोऽपीति।

१८ 'तित्थं खलु'त्ति गाथया तीर्थपूजनेन न किमप्यपूजितमित्यभिप्रायेण तीर्थपूजाप्रवृत्तिस्वरूपम्।

२४ तं चिअ इत्यादिगाथाषट्केन तीर्थकृत्प्रवर्त्तितमपि तीर्थं

४९ पायं कुवकुखत्तिगाथया कुपाक्षिकालापस्य साधारणस्वरूपं, तत्स्वरूपं दूषयितुं भवतां पुस्तकं सिद्धांत उत परंपरा सिद्धांत इति कुपाक्षिकान् प्रति विकल्पद्वयोद्भावनम्।
५१ पुत्थयेत्यादिगाथाद्विकेन पुस्तकसिद्धांते वज्रदृष्टान्तः ।
५३ 'घेणू वावि'त्ति गाथया पाठरूप एकोऽपि सिद्धांतो धेनुदृष्टान्तेन भविष्यतां तीर्थाभासस्य च क्रमेण शुभमशुभं च फलं विधत्ते।
५४ घेणू सुत्तमितिगाथया दृष्टांतदार्ष्टांतिकयोजना।
५५ एवमितिगाथया प्रथमविकल्पदूषणोपसंहारः ।
५६ तेणं परंपरत्तिगाथया कुपाक्षिकानिष्टस्य परंपरागमस्य समर्थनं च।
५७ छिन्ने जाविअत्तिगाथया तीर्थाभासस्य मूलं न ऋषभादयः, किन्तु तदादिकर्त्तारः सहस्रमल्लादयः।
५८ तेसुवित्तिगाथया राकादिनवकस्य प्रासंगिकभणनम्।

५९ सोहम्मत्तिगाथया राकादयः सुधर्म्मापत्यानि न स्युः।
६१ पंचपरमेट्ठि इत्यादिगाथार्धकेन पुस्तकसिद्धांतवादिनां यन्न संभवति तदाह ।
६२ ववहारिअस्सत्तिगाथया परंपराशून्यपुस्तकसिद्धांतेन स्वाद्याचारप्रवृत्तिर्न भवत्येव ।
६३ अत्तागमेत्तिगाथया आत्मागमादीनां स्वरूपम् ।
६५ सूरिपरंपरेत्यादिगाथाद्विकेन आत्मागमादीनां मध्ये भवतां किं नामागम इति प्रश्ने कुपाक्षिकोऽव्यक्तमेव सिद्धांतं ब्रूत इति विचारः ।
६७ जह आगमोत्तिगाथया कुपाक्षिकाणां सिद्धांतवचनकृत्तीर्थकरादयोऽप्यव्यक्ता एव।
६८ उसभाइ इत्यादिगाथाद्विकेन ऋषभादयोऽपि तन्मते कीदृशा इत्यादि ।
७६ सव्वेहिं सद्देहिं इत्यादिगाथाऽष्टकेन कुपाक्षिकमार्गप्ररू-

पक्षाः कथं क्षपमादिसम्बन्धाभ्याः कथं या तीर्थाभिम तेभ्यो भिन्ना इति विचारः।

७७ सिद्धाविअत्तिगाथया सिद्धादयोऽपि तेषां भिन्ना एवेति विचारः।

८१ भिन्नभिन्न इत्यादिगाथाचतुष्केन क्षपाधिकानां सिद्धांतो भिन्नभिन्न एव, तत्र युक्तिश्च।

८७ ननु तेसिमित्यादिगाथाचतुष्केन तेषामाचार्यादयो भिन्नाः प्रस्फुटाः, परं कथमर्हत्सिद्धा अपीति पूर्वपक्षरचना।

८८ तेसुविधि गाथया लुपकवर्गानां कुमहानरूपम्यपरो- गोऽस्साम्यः।

८९ लुंपकेति गाथया लुपकस्य तथा रोगो द्विविधः—साध्यो- ऽसाध्यश्च।

९४ समुसरणे इत्यादिगाथापंचकेन साध्यस्य लुंपकपशुरो- गस्यांजनम्।

९५ तेसिमितिगाथयाऽञ्जनक्षेपे शलाका।

९६ एएणाविगाथया उक्तांजनप्रक्षेपेऽपि रोगसद्भावेऽपर प्रकारोऽसाध्य एव।

९७ एव सुविचित्तिगाथया तीर्थस्य तीर्थाभासस्य च विचारा- भ्यासः कर्तव्य इत्युपसंहारः।

९८ एय तित्थविगाथया उक्ताभ्यासस्य फलमाह।

१०१ एवं क्षपकखेत्यादिगाथात्रिकेण विश्रामोपसंहारः।
इति १ तीर्थव्यवस्थापनाविश्रामबीजकम्



अथ दिगंबरमतनिराकरणविश्रामबीजकम्

२ अथ पगयमित्यादिगाथाद्विकेन सर्वक्षपाधिकसाधारण- लक्षणम्।

३ तत्थ चेतिगाथया दिगंबरमतमूलप्ररूपणाया उपेक्षः।

४ तस्सुप्पत्तिविधि गाथया तस्योत्पत्तिकालो बहिर्निर्गमेन

निमित्तं च ।

५ तम्मयेतिगाथया वस्त्राभावप्ररूपणायां तस्याकूतम् ।

६ देहाहारेतिगाथया दिगम्बराकूतस्य तिरस्कारः, एतद्वृत्तौ च जिनानुपदिष्टत्वमित्यादिविकल्पनवकोद्भावनादिना पूर्व्वपक्षसिद्धांतरचनाविचारः ।

७ सीसो गुरुत्ति गाथया तीर्थंकृत्शिष्यस्तीर्थंकरानुकारी भवतीति दिगम्बराकूताविष्करणं ।

९ 'नेवं जुत्त'मित्यादिगाथाद्विकेन दिगंबराभिप्रायनिराकरणयुक्तिः ।

१० अरिहंतेत्यादिगाथया गुरुशिष्ययोः सादृश्ये सादृश्याभावे च हेतुमाह ।

११ तेणमितिगाथया तीर्थंकृतः साधोश्च स्वरूपम् ।

१२ जइ जिणेतिगाथया तीर्थंकृदनुकरणे छद्मस्थेन धर्म्मोपदेशादि परिहरणीयं स्यादिति ।

१३ जइ जिणेतिगाथया महतामुपदेश एव श्रेयान्, न पुनरुपदेशबाह्यं तदनुकरणमपि ।

१५ उवएसोत्ति इत्यादिगाथाद्विकेन जिनोपदेशः ।

१६ विज्जुवएसत्तिगाथया उपदेशे दृष्टान्तः ।

१७ एवमितिगाथया दार्ष्टांतिकयोजना ।

१८ उवगरणेतिगाथया वस्त्राद्यभावे दोषमाह ।

४२ इत्थीमुत्तिअभावे इत्यादिगाथानां चतुर्विंशत्या दिगंबराशयोद्भावनपुरस्सरं स्त्रीमुक्तिव्यवस्थापना ।

५३ जं केवली न भुंजइ इत्यादिगाथैकादशकेन केवलिभुक्तिव्यवस्थापना ।

५४ सिवभूइत्तिगाथया दिगंबरमतवृद्धिनिदानम् ।

६३ तं मिच्छा जं पच्छा इत्यादिगाथानवकेन दिगंबरेभ्यः श्वेताम्बरा निर्गता उत श्वेताम्बरेभ्यो दिगंबरा इति संशये निर्णयकरणविचारः ।

६४ अहवा सब्बपसिद्धमिति गाथया प्रकारांतरेण दिगंबरस्य तीर्थबाह्यतापरिज्ञाने युक्तिः ।

७० उज्जिंतगिरिइत्यादिगाथाषट्केन दिगंबरेण प्रतिमा नग्ना कारिता तन्निदानं दृष्टान्तश्च ।

७२ एवं मोहिय इत्यादिगाथात्रिकेनान्यतीर्थिकपतीर्थाद् दूर वर्तित्वेनोपेक्षातोऽपि यदत्र भणितस्तन्निदानम् ।

७५ एवं इत्यस्येत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति २ दिगंबरमतनिराकरणविश्रामबीजकम्



अथ पौर्ण्णिमीयकमतविश्रामबीजकं लिख्यते

१ अह चउप्पहेति गाथात्रिकेण राकामतोत्पत्तिः प्रवचन समयमवननिदानं मताकर्षणाभिमानं च ।

९ निमपरिमाण पइट्ठा इत्यादिगाथाषट्केन श्रावकप्रति ष्ठाव्यवस्थापनाय चन्द्रप्रभाचार्योक्तानितानुमानरचना-पुरस्सरं तन्निराकरणमक्षरः ।

१४ दव्वत्थयहेतु इत्यादिगाथापंचकेन साधूनां द्रव्यस्तवो ऽनुचित इति भ्रांत्या परोक्तावितेष्टापत्त्या दूषणमाह ।

१६ दव्वत्थयत्ति कारणमित्यादिगाथात्रिकेन प्रतिष्ठारूपस्य द्रव्यस्तवः, स च साधूनां सर्व्वथा नोचित इति भ्रांतस्या-शंकामुक्ताप्येष्टापत्त्यैव दूषयति ।

१८ किंचेति गाथात्रिकेन तीर्थकृतः साधूनां च कथंचिद्द्रव्य-स्तवोऽप्युचित एव ।

१९ अण्णुण्णमितिगाथया द्रव्यभावस्तवयोरन्योऽन्य सापे क्षता, तथाऽपि साधूनां भावस्तव श्रावकस्य द्रव्यः इति व्यवहारे हेतुमाह ।

२२ अह सावयाणेत्यादिगाथात्रिकेण श्रावकाणां द्रव्यस्तव इति युक्तिपूर्व्वकं दृष्टान्तमाह ।

२५ णमणिसो इत्यादिगाथात्रिकेन श्रावकधर्म्मे द्रव्य

स्तवो गरीयान् स्वरूपकांतोऽपि भावस्तवोऽल्पीयान् ।

२५ जं सावयेत्यादिगाथया प्रागुक्तसमर्थनं ।

२६ तेणं सइ इतिगाथया सामायिकाद्यपेक्षया चैत्यादिकृत्यं महदिति ।

२७ भावथया इतिगाथया साधुमार्गे द्रव्यस्तवभावस्तवयोः स्वरूपं दृष्टान्तश्च ।

२९ सचित्तेत्यादिगाथाद्विकेन श्रावकधर्म्मे कथं द्रव्यस्तवो महान् कथं वा साधुधर्म्मेऽल्पः इति शंकानिराकरणम् ।

३२ णणु निरवज्जो इत्यादिगाथाद्विकेन निरवद्यवासेन साधूनां द्रव्यस्तवः कथं नोचित इति पराभिप्रायनिराकरणम् ।

५३ इअ चंदप्पहेत्यादिगाथानां द्वाविंशत्या चन्द्रप्रभाचार्योक्तमुपसंहृत्य तिलकाचार्यकृतप्रतिष्ठाकल्पाभासनिराकरणपूर्व्वकं साधुप्रतिष्ठाव्यवस्थापना ।

५८ एवं आगमेत्यादिगाथाद्विकेन श्रावकप्रतिष्ठाप्ररूपणानंतरं पूर्णिमापाक्षिकप्ररूपणे किं निमित्तं कथं वा संघोक्तिरासीदिति ।

७८ पक्खस्स मज्झे इत्यादित्रयोविंशतिगाथाभिः सिद्धांतसम्मत्या चतुर्दशीपाक्षिकव्यवस्थापना ।

८५ जोइसकरंडेत्यादिगाथासप्तकेन ज्योतिष्करंडादिवचोजाताया भ्रांतेरतिप्रसंगेन निरासः ।

८६ चउदसी पक्खी इतिगाथया चतुर्दशीपाक्षिकभीतेन महानिशीथसूत्रत्यागात् उपधानमपि त्यक्तमिति विचारः ।

८९ णणु उवहाणा इत्यादिगाथात्रिकेण परप्रश्नविकल्पद्वारा सिद्धांतसम्मत्या उपधानव्यवस्थापना ।

९३ अह महनिसीहेत्यादिगाथाचतुष्केण हरिभद्रसूरिवचसा महानिशीथस्याप्रामाण्यं वदतो हरिभद्रसूरिवचसैव प्रामाण्यव्यवस्थापनेन तिरस्कारप्रकारः ।

९४ चित्तं हरीतिगाथया हरिभद्रसूरिवचःपुरस्कारेण महा-

निशीथत्यसने आश्चर्यम्।

९५ अह सत्तुविमाथया गणधरसयने कुशाविकाणां नास्तेति।

९६ हरिभद्रेणविधिगाथया यदि गणधरसघसास्ता तर्हि कुशाविकेण यद् त्यक्तव्यं तदुल्लेखमाह।

९८ हरिभद्रस्सपीत्यादिगाथात्रिकेन हितोपदेशः।

९९ हरिभद्रपीतिगाथया हरिभद्रवचसः प्रामाण्ये महानिशी थमप्रमाणमिति वक्तुमशक्यम्।

१०२ नणु उवहाणा इत्यादिगाथात्रिकेण पूर्वपक्षाशंका।

१०५ समियमित्यादिगाथात्रिकेणैतापत्त्याऽतिप्रसंगाभावः।

१०८ उवहाणेत्यादिगाथात्रिकेण उपधानवहनमतरेणापि भाव फलके बालकादीनामपि कथं नमस्काराध्ययनं युक्तमि तिपराशंकानिराकरणम्।

१०८ एवं भावस्सवेतिगाथया आधाराभावादतिप्रसंगनिरा करणम्।

११२ सुत्तोवयारेत्यादिगाथात्रिकेणोपधानवहनादिनियमः श्रुत व्यवहारकालापेक्षो,न पुनरागमव्यवहारकालापेक्षोऽपि।

११३ नणु अहेतिगाथया पूर्वपक्षी महानिशीथाप्रामाण्ये हेतुमाह।

११४ अह एवमितिगाथयाऽतिप्रसंगेन निवारणम्।

११५ तम्हा इतिगाथया तात्पर्यम्।

११६ आयारो उवेत्यादिगाथया उपधानं महानिशीथ एवास्ति नान्यत्रेति पराकूतनिराकरणम्।

११७ जोगे आसादेत्यादिगाथया योगे उपधाने उदाहरणानि।

११८ सुअक्खंध इतिगाथया सामायिकाध्ययनैकदेशो नम स्कारः श्रुतस्कंधो न भवति महानिशीथे च तयोरुको- ऽस्तत्स्तत्र नत्वस्माक सम्मतमिति पराशंका।

११९ इअ चे इतिगाथया तन्निराकरणयुक्तिः।

१२० सव्वमंतरेतिगाथया नमस्कारस्य महाश्रुतस्कंधत्वस्थापना

१२१ पत्तसाहे इतिगाथया दृष्टांतः ।
१२२ एवमितिगाथया दार्ष्टांतिकयोजना ।
१२३ सक्कस्मत्तिगाथया शक्रस्योपधानं विना शक्रस्तवभणनं निर्दोषं कथं नराणा सदोषमिति पराशंका ।
१२६ उद्देसेत्यादिगाथाद्विकेन कस्य श्रुतस्योपधानं कस्य वा नेति कस्मै केन विधिना दातव्यमिति विचारः ।
१२७ जं पुणेत्यादिगाथया कदाचित् श्रावकेणापि दानेऽनुज्ञाया अभावे नमस्कारादि स्वसुतादयः पाठ्यंते तत्र गतिमाह ।
१२८ वहविहेतिगाथया कथंचिदुपधानवहनाभावेऽपि शुद्धिप्रकारमाह ।
१२९ सामण्णेणंतिगाथया नमस्कारपाठने सामान्यतोऽयोग्यस्य लक्षणम् ।
१२९ जुग्गाजुग्गत्तिगाथया नमस्कारदाने पात्रापात्रविचारणा कर्त्तव्या ।

१३० सामाण्णेणंतिगाथया सामान्यतो योग्यस्य लक्षणं ।
१३१ वुग्गाहिओत्तिगाथया नमस्कारश्रावणेऽप्ययोग्यस्य लक्षणम् ।
१३३ जंणमित्यादिगाथाद्विकेनायोग्यस्य नमस्कारश्रावणे प्रतिसमयमनंतसंसारवृद्धिः शृण्वतोऽपीति तत्र युक्तिश्च ।
१३४ परमेसरुत्ति गाथया दृष्टांतः ।
१३५ पुच्छिज्जंतोत्ति गाथया नमस्कारश्रावणेऽपि दुर्ध्यानाविष्करणे अपायमाह ।
१३८ एवं कुवक्खवग्गोत्तिगाथात्रिकेण कुपाक्षिकस्य नमस्कारश्रवणे महाकर्म्मबंध इति दर्शनम् ।
१३९ इअ पुण्णिमेतिगाथया राकामते मूलमुत्सूत्रत्रिकं दर्शितमित्युपसंहारः ।
१४१ सेसमितिगाथाद्विकेनातिदेशः खरतरेण सह शेषोत्सूत्रेषु ।

इति ३ पौर्णिमीयकमतनिराकरणविश्रामबीजकम् ।



अथ खरतरमतविभ्रामचीसर्क लिख्यते

१ अह खरयरत्ति प्रथमगाथया सामान्यतोऽभिधेयम् ।

२ कुचयरत्तिगाथया जिनवल्लभचरित्रं, एतत्पृष्ठघो च प्रसंगतो गणधरसार्द्धशतकवृत्तिमतमेव लिखितम् ।

३ सो भउमितिगाथाद्विकेनोक्तव्यतिकरो जिनवल्लभः किं कृत्वा किं कृतवानित्याह ।

५ तेसिं पुरओत्तिगाथया जिनवल्लभेन षड्ं कल्याणकं प्रस्पितम् ।

६ एवं मुग्धाईसोधिगाथया कतिपयानि मुग्धजनान् व्युद्ग्राह्य निजपदशिष्यरहित एव परलोक प्राप्तः ।

७ इअ जिणेत्तिगाथया भाविखरतरमतबीजभूतो विधिसंघ नाम्ना कतिचिज्जनसमुदायो जिनवल्लभाज्जात इति दर्शितम्

८ कुचयरा इतिगाथया जिनदत्तात् विधिसंघस्स एव खरतरनाम्ना क्रमतः प्रवर्तितम् ।

९ निस्सामिअत्तिगाथया विधिसंघस्स स्वामी जिनदत्तः कथं जात इति व्यतिकरः, एतत्पृष्ठघो च जिनवल्लभस्ये चासापि संबंधो गणधरसार्द्धशतकवृहद्वृत्तिगत एव लिखितः, एतद्व्यतिकरविचारणाऽभिनवनाटककल्पा सत एव विचारणीया ।

१० गम्भहरसद्दुत्तिगाथया वर्ण्यकवर्णं जिनदत्तस्स स्वरूपं सम्यगिति ज्ञापितम् ।

११ वण्णयनयणमित्यादिगाथासप्तकेन कुपाक्षिकैर्निजनिज गुरवो वर्णितास्ते कथं भवेयाः ? को वा तत्र दृष्टान्तः ?

१२ तेणेव इतिगाथाद्विकेन जिनवल्लभस्थापितो विधिसंघो जिनदत्तेन कथं गृहीत इति विचारः ।

१३ जिणवल्लभेत्यादिगाथात्रिकेण जिनवल्लभजिनदत्तयोरन्योऽन्यं कीदृशः संबंध ? कथं वा अनयोराचार्य पदप्राप्तिः ।

२४ 'भिन्नदिसाबंधेणं'ति भिन्नभिन्नदिग्बंधेन जिनवल्लभजिनदत्तयोरन्योऽन्यं विसंभोगिकत्वं तत्र सम्मतिश्च।

२६ जिणदत्तादिसेत्यादिगाथाद्विकेन श्रीअभयदेवसूरिजिनवल्लभजिनदत्तानां परस्परं गुरुशिष्यसंबंधाभावादिनिर्णयः

२९ निरवच्चमयस्सावीत्यादिगाथात्रिकेण जिनवल्लभजिनदत्तनामानावनुत्तरसौभाग्यभाजावित्युपहास्ये हेतुमाह।

३० सप्पाकरिसणत्तिगाथया जिनवल्लभेन जिनदत्तेन च निजनिजचेष्टयैव भाव्यात्मस्वरूपं ज्ञापितम्।

३१ इच्चेवं जिणेत्यादिगाथया उक्तव्यतिकरस्य ग्रन्थसम्मतिः

३२ जिणदत्ता इतिगाथया खरतरमते चतुर्वर्ण्णः संघो जिनदत्तादेव जात इति दर्शितम्।

३९ अह चामुंडिअ इत्यादिगाथासप्तकेन खरतरादिनाम्नामुत्पत्तिनिदानकालादिविचारः,एतद्वृत्तौ च बहूपयोगित्वात्प्रसंगतः प्रभावकचरित्रगतं श्रीअभयदेवसूरिचरित्रम्।

४५ जं पुण जिणेसरेणेत्यादिगाथाषट्केन श्रीजिनेश्वरसूरेः खरतरविरुद्धं खरतरा वदंति तत्सत्यमुतासत्यमिति विचारः

४८ जेणं जिणदत्तेति गाथात्रिकेण प्रायः खरतरमते प्राचीनपाठपरावृत्तिकरणमर्थान्यथाकरणमसम्मत्यादिविधानप्रभृतिकं स्वमतानुसारेण क्रियमाणं दृश्यते तद्विचारः।

५० किंच विवाउ इत्यादिगाथाद्विकेन खरतरनाम्ना विरुद्धमेव न संभवतीति विचारः।

५५ जइ जयवाए इत्यादिगाथापंचकेन श्रीजिनेश्वरसूरेः खरतरबिरुदं न जातमिति निर्णयः।

५८ एगारससयेत्यादिगाथात्रिकेण जिनवल्लभवचनं खरतराभिप्रायेण गणधरसार्द्धशतकविरुद्धम्।

५९ एवं जिणवल्लहउत्तिगाथया खरतरपट्टावली विचार्यमाणा अभिनवनाटककल्पा स्थूलमतीनामपि।

६० पायं जिणदत्तेत्यादिगाथया प्रायः खरतरमतस्यालीक-

कल्पनास्वभावदर्शनम् ।

६६ ननु जिणवल्लहेत्यादिगाथाषट्केन पूर्वाचार्यैः प्रशस्तितोऽपि जिनवल्लभः कथमिह दूषित इति पराशङ्कानिराकरणम् ।

६७ खरयरेत्यादिगाथया खरतराभिमतस्य जिनवल्लभस्य संतानं जिनदत्तो न भवति, किन्तु रौद्रपल्लीय एवेति विचारः ।

६९ जिणवइरित्यादिगाथाद्विकेन खरतरमतमर्यादाकारको जिनपतिसूरिरेव ।

७० तीए पमाणेत्यादिगाथया खरतरमतस्य प्रमाणतया स्वीकारे जैनप्रवचनस्याप्रमाणीकर्त्तव्यं भवेत् ।

७२ ननु वद्धमाण इत्यादिगाथाद्विकेन प्रद्योतनसूरिवर्द्धमानाचार्ययोरिव श्रीअभयदेवसूरिजिनवल्लभयोरपि अभूतोऽपि संभवभिन्न संबंधोऽन्यथाकल्पनेन कलङ्कितः ।

७३ ननु बहु सायमित्यादिगाथया संबंधादिना सर्व्वथाऽलीकमपि बहु स्यात् कथं आत्तमित्यादिविचारः ।

७४ सम्मद्दिट्ठीत्यादिगाथया सम्यग्दृशामप्यनाभोगात् मृषानुवादो भवत्येव ।

७५ बहुकालेतिगाथया सत्यासत्यानुवादे निदानमाह ।

८५ कइमण्णइत्यादिगाथात्रयेन उपदेशसप्ततिकादिकारकाणामनाभोगस्य स्पष्टीकरणम् ।

८८ जह पायमित्यादिगाथात्रिकेण नवांगीवृत्तिकारकोऽभयदेवसूरिः खरतर इति खरतरमुखानुवादोऽलीक इति पृथक् ज्ञापनम् ।

८९ एयम कोइ इत्यादिगाथात्रिकेन नाममात्रेण तीर्थांतर्वर्त्ती तत्पक्षपाती कदाचित् पापालोऽन्यथा जल्पन् तिरस्कृतो भवति ।

९१ जं पुण्णमितिगाथया श्रीअभयदेवसूरिजिनवल्लभयोरपि

दत्तानां परस्परं प्ररूपणाभेदोऽपि, स चानंतरं वक्ष्यमाणो सूत्रविचारणातोऽवसातव्यः ।

९३ अह उस्सुत्तमित्यादिगाथाद्विकेन उत्सूत्रोद्देशः ।

९६ गब्भावहारेत्यादिगाथात्रिकेण क्रियाविषयकाधिकोत्सूत्रोद्देशः ।

१०३ भण्णइ भणिअमित्यादिगाथासप्तकेन गर्भापहारः कल्याणकं न भवति ।

१०८ रयणिपोसेत्यादिगाथापंचकेन रात्रिपौषधिकानां रात्रिचरमयामे सामायिककरणमधिकम् ।

११० सामाइअ इत्यादिगाथाद्विकेन श्रावकाणां सामायिकादेः साधोरिव त्रिरुच्चारोऽधिकः ।

१११ अण्णहत्तिगाथयाऽतिप्रसंगेन निरासः ।

११२ पोसहविहिंमित्तिगाथया एकवारोच्चारे जिनवल्लभवचनसम्मतिः ।

११३ साहूणमितिगाथया श्रावकवत्साधूनामप्युपधानवहनमधिकम् ।

११४ उस्सग्गेणमितिगाथया साधूनामुत्सर्गेण कसेल्लकजलग्रहणमधिकं, तद्वृत्तौ च तन्निराकरणसम्मतिः ।

११५ तसजयणेतिगाथया कसेल्लकजलग्राहिणः साधोस्त्रसानुकंपा न स्यादिति ।

११७ सावयकुलेत्यादिगाथाद्विकेन पर्युषितद्विदलग्रहणमधिकं, तद्वृत्तौ च तन्निषेधसम्मतिः ।

१२० नणु पज्जुसिअ इत्यादिगाथात्रिकेण पर्युषितद्विदलग्रहणे पूर्व्वपक्षाशंका तन्निराकरणं च ।

१२४ पज्जुसिअ इत्यादिगाथाचतुष्केण द्विदलौदनयोः स्वरूपभणनेन ग्राह्याग्राह्यविचारणा ।

१२६ जं जं बहुलेत्यादिगाथाद्विकेन बहुलप्रवृत्तेः प्रवचनमर्यादा तत्रोदाहरणं च ।

१३७ नइसिअ इत्यादिगाथैकादशकेन क्वाचिदविनष्टमपि पर्युषितद्विदलं न भक्ष्यं, तत्रानेके दृष्टान्ताः ।
१३९ पज्जुसियसद्दत्थो इत्यादिगाथात्रिकेन पर्युषितशब्दस्य कोऽर्थ इति विचारणाप्रकारः ।
१४० जंमि उत्तिगाथया द्विदलाद्विदलयोर्लक्षणम् ।
१४२ एवं विदलेत्यादिगाथात्रिकेन द्विदललक्षणरहितमपि संगरिकादिकं द्विदलमिति भणनमविकं तन्निरासश्च प्रत्यक्षप्रमाणेन ।
१४४ जं दोलाविसीए इत्यादिगाथात्रिकेन संदेहदोलावली-वृत्तौ प्रवचनसारोद्धारसम्मत्या संगरिकादिद्विदलभणनं महामूर्खत्वचिह्नम् ।
१४५ तब्भिचीएत्तिगाथया प्रवचनसारोद्धारस्य वेः समर्थनम् ।
१४६ जं यमितिगाथया खरतराभिप्रायस्य दूषणम् ।
१४७ नेवं संगरित्तिगाथया दृष्टान्तस्य दूषणदानम् ।

१४८ जं जं विगइत्तिगाथया यावद्भिर्विकृतिक तावत् कृतम स्यास्त्यानवर्ती कल्प्यमेवेति नियमाभावमाह ।
१४९ ता कथमित्यादिगाथया खरतरेणाभयदेवसूरिसम्मतिर्दर्शिता साऽपि दूषिता ।
१५० एवमिमितिगाथया यत् यद्विषयं क्रियाविषयमधिकमुत्सूत्रं दर्शितं तद् बहु स्यात्तं,एवमन्यदपि तन्मते भूयोऽस्तीति ।
इत्यधिकोत्सूत्रबीजकम्



अथैतमूनोत्सूत्रबीजकं लिख्यते
१५१ अह ऊणमित्यादिगाथात्रिकेण ऊनोत्सूत्रोद्देशः ।
१५४ इत्थीपमितिगाथया स्त्रीजनपूजानिषेधनिदानम् ।
१६१ पमायरादेत्तिगाथासप्तकेन एकस्मिन्नपराधे तज्जातीयमात्रस्य प्रायश्चित्तदाने जिनदत्तस्य महामूर्खत्वं ज्ञापितम् ।
१६२ परमन्नमित्यादिगाथात्रिकेन लौकिकदृष्टान्तेन यथाऽमि

प्रायनिराकरणम् ।

१६६ जिनदत्तो इत्यादिगाथात्रिकेण जिनदत्तादप्युपदेशमधिकृत्य दिगंबरो दक्षस्तत्र हेतुश्च ।

१६७ पुव्विं विराहिओ इत्यादिगाथया स्त्रीजिनपूजानिषेधे मूलहेतुमाह ।

१६८ नणु तित्थयरेणत्तिगाथया तीर्थंकरकल्पेन जिनदत्तेन प्रकाशितं कथं दूषयितुं शक्यमिति पराशंका ।

१६९ एवं चे इत्यादिगाथया सूरिप्रवर्त्तने उत्सूत्राभावे उत्सूत्रं खपुष्पकल्पं संपद्येतेति विचारः ।

१७० तम्हा इतिगाथया तीर्थंकरसमानसूरिलक्षणमाह ।

१७१ सूरिकयोऽवित्तिगाथया सूरिकृतं यद्यादृशं प्रमाणं तदाह ।

१७२ जिणपूआ इत्यादिगाथया जिनपूजानिषेधे वैपरीत्यमेवेत्याह ।

१७३ एएणमितिगाथया सूरिप्रवर्त्तने तात्पर्यमाह ।

१७४ इह सुत्तेत्तिगाथया अमुकग्रंथे स्त्रीणां जिनपूजा भणिता स्त्रीत्वादिरूपेण सूत्रसम्मतेः प्रयोजनं नास्ति, यतो मूर्खजनप्रत्यायनार्थमस्माकं सामाचारीति वदति ।

१७५ पागयेत्यादिगाथया स्त्रीजिनपूजानिषेधकतिरस्कारे वचनोल्लेखमाह ।

१७६ तित्थासम्मयेतिगाथया तीर्थस्यासम्मतं भाषमाणो नियमेनानंतसंसारीति ।

१७७ एएणमितिगाथया मग्गंतरेहिन्ति सूत्रवचसा ममापि मार्ग एवेति मतश्रितोऽपि तिरस्कृतः ।

१७८ अट्ठमिचउद्दसिइतिगाथया चतुष्पर्वीव्यतिरिक्ततिथिषु पौषधनिषेधो जिनदत्तस्य महामोहः ।

१७९ अट्ठमिपमुहेतिगाथया प्रागुक्तस्य प्रतीकारः तत्त्वार्थसम्मतिश्च ।

१८० तत्तत्थवित्तिइतिगाथया कुपाक्षिकभ्रान्तिजनकपदस्य

वत्सस्य तत्त्वार्थसूत्रावुकम् ।

१८१ सिक्खा पुणेतिगाथया श्वेतस्तिथिषु पौषधाकरणे विरोधमाह ।

१८२ सिक्खावयपसुचिगाथया मतिर्बध्याऽतिप्रसंगोद्भावनम् ।

१८३ न मुणइत्तिगाथया साक्षादतिप्रसंगाख्यानमाह ।

१८५ पडिक्कमणमितिगाथाद्विकेन प्रतिक्रमणदृष्टान्तेन पौषध-
नियमं प्ररूपयन् प्रायश्चित्तसंवराभ्यां तिरस्कृतः ।

१८९ अहवा सिक्खेत्यादिगाथाचतुष्केन चतुष्पर्व्यतिरिक्ता-
स्वपि तिथिषु पौषधव्यवस्थापनम् ।

१९० किंच मुणि इतिगाथया दृष्टान्तरमाह ।

१९१ नं भोअणेत्यादिगाथया पौषधिकानां भोजननिषेधः
उन्मूलितम् ।

१९२ पडइसढइत्यादिगाथाद्विकेन पौषधिकानां भोजनव्य-
वस्थापनम् ।

१९५ सावयपडिमेत्यादिगाथाद्विकेन श्रावकप्रतिमाधर्म्मेष्वु
प्येवं वदन् तिरस्कृतः ।

१९७ समणाण समणीहिन्ति गाथाद्विकेन साधुभिः सह साध्वी
विहारो, नान्यथेति, एतद्वचो चानेकार्थसम्मतयम ।

२०२ अहुणा मासेत्यादिगाथापंचकेनाधुना मासकल्पो व्युच्छिन्न
इति वदतस्तिरस्कारप्रकारः ।

२०३ गुरुस्थानां प्रत्याख्याने पानकसाकारव्यवस्थापनं तत्र
सम्मतिश्च ।

## इत्येयमूनोत्सूत्रबीजकम्



## अथायथाख्यानोत्सूत्रबीजकम्

२०४ अबोहेत्तिगाथया अयथाख्यानोत्सूत्रस्य लक्षणं लक्ष्यं च,
अभिवर्धितवर्षे श्रावणेऽपि पर्युषणा ।

२०५ अण्णमितिगाथया सिद्धान्तसम्मता भाद्रपद एवामि

वर्द्धितेऽपि मासे पर्युषणा ।

२०६ जह चाउत्तिगाथया चातुर्मासकवत्पर्युषणाऽपि मास-नियतेति ।

२०७ मासाइअत्तिगाथया मासवृद्धौ प्रथमोऽवयवः प्रमाण-मेवेति वदतो जिनदत्तस्यायथास्थानमुत्सूत्रं ।

२०८ वुड्ढीपढमो इतिगाथया वृद्धौ प्रथमोऽवयवो नपुंसकोऽतो द्वितीय एव श्रेयानिति ।

२१० एएणऽहिए इति गाथाद्विकेन परोपहास्यं तन्निराकरणं च ।

२११ णणु बीएविच्चिगाथया पराशंकोद्भावनम् ।

२१२ जं रवीतिगाथया अभिवर्धितमासादौ यस्य प्रामाण्यं तदाह ।

२१३ तेणं तिहित्तिगाथया तिथिपाते पूर्वैव ग्राह्येति विचारः ।

२१४ वुड्ढीइ पुणेत्तिगाथया वृद्धौ प्रथमा तिथिः पूर्णेत्यादि परवचनमश्राव्यम् ।

२२२ जम्हा तीए इत्यादिगाथाष्टकेन तिथिमासादिवृद्धौ हानौ च प्रामाण्याप्रामाण्यनिर्णयो दृष्टान्ताश्च ।

२२३ इरिअत्तिगाथया ईर्यां विना सामायिककरणमयुक्तम् ।

२२४ चित्तविसोहीतिगाथया प्रथमेर्यायाः प्रयोजनं श्रीमहा-निशीथोक्तम् ।

२२५ अहावस्सयेतिगाथया भ्रांत्या ग्रन्थसम्मतिमादाय पूर्व्व-पक्षी शंकते ।

२२६ इअ चेइतिगाथया पूर्व्वपक्षाशंकाया निरासः, तद्वृत्तौ युक्तिपूर्वकग्रंथसम्मतयश्च ।

२२७ तम्हा पढमेतिगाथया ईर्यायां तात्पर्यमाह ।

२२८ जइवि सुपासे इतिगाथया पार्श्वसुपार्श्वयोः फणानां न्यूनाधिककरणेनारोपोऽयथास्थानम् ।

२२९ एवं अजहट्ठाणमितिगाथया क्रियाविषयकोत्सूत्रोपसंहारः।

इत्ययथास्थानोत्सूत्रबीजकम्



अथोपदेशविषयकोत्सूत्रबीजकम्

२३० अह पुव्वेतिगाथया उपदेशविषयं द्वितीयमुत्सूत्रं प्रागुद्दिष्टं यत्तद् द्विप्रकारमितिविभागः ।

२३१ अहिअमितिगाथया उपदेशविषय द्विविधमप्युत्सूत्रं क्रियोत्सूत्रादनंतगुणम् ।

२३३ अहवेत्यादिगाथात्रिकेन प्रकारांतरेण नामतोऽपि द्वैविध्यमाह

२३४ लोभजयिगाथया लौकिकमिथ्यात्वादनंतगुणपापहेतु स्वरूपविषयं द्विविधमपि उत्सूत्रम् ।

२३५ जम्हा उ संकिलिट्ठो इतिगाथयाऽनंतगुणपापहेतुत्वे हेतुमाह ।

२३६ तेणंति गाथया प्रमुक्तसमाचारेऽनन्यतीर्थिकस्य भव-मोक्षगामी साम पुनरुक्तमिति ।

२३९ एव इच्चस्सेत्यादिगाथात्रिकेण विभागोपसंहारः ।

इति ८ खरतरमतनिराकरणविश्रामबीजकम्

अथांचलिकमतनिराकरणविश्रामबीजकं लिख्यते

५ अह अंचलिअमितिगाथापंचकेनांचलिकमतोत्पत्तिनिदा-नफलादिविचारः ।

६ तीए मरिपयरुथमितिगाथयांचलिकमताकर्षकस्याचार्य-पदवीप्राप्तिकरः ।

८ नियमयेत्यादिगाथात्रिकेन नरसिंहेन कालिकादेवी कथ-माराधितेति विचारः ।

९ उस्सुत्तमितिगाथया प्रथमोत्सूत्रस्वरूपं तत्र मुखवस्त्रिका ।

१२ मो पुत्तिअमितिगाथात्रिकेणांचलिकाभिमायनिराकरणं ।

१३ धम्मोवगरणेतिगाथया धर्मोपकरणरहितः कृतसामा-यिकोऽपि व्यवहारनयबाह्यः ।

१४ उवगरणमितिगाथया आवश्यकनिर्युक्त्यनुयोगद्वारा दिषु साध्वादीनां चतुर्णामपि रजोहरणादि क्रियासाधन मभिहितम् ।

१५ तह पण्हाइतिगाथया उपकरणप्रतिषेधानंतरं कारणाभावे कार्यस्याप्यभाव इति कार्यभूतं प्रतिक्रमणं निषिद्धम् ।

१७ पज्जोसवणेतिगाथया शतपदीवचनेन स्तनिकस्य पर्युषणा चतुर्थ्यामेवाऽऽसीत् ।

१८ एगुणवण्णेतिगाथयाऽभिवर्द्धितेऽपि श्रावणभाद्रपदवृद्धौ स्तनिकमते पूर्व्वमेकाधिकेन पंचाशता दिनैः पर्युषणाऽऽसीत्, इदानीं तु अन्यथाऽपि ।

१९ चित्ताइअंमित्तिगाथया चैत्रादिवृद्धौ विंशत्या दिनैः पर्युषणा तन्मते ।

२० जं पुणेतिगाथया अर्धजरतीयन्यायेन संप्रतिप्रवृत्तिर्दूषिता

२१ जंणं चुण्णीतिगाथयाऽर्द्धजरतीयव्यक्तीकरणं, एतद्वृत्तौ शतपदीसम्मतयश्च ।

२५ तित्था चुअस्सातिगाथाचतुष्टयेन तीर्थात् भ्रष्टस्यागमः शरणं न भवति, तत्रागमानुसारेण युक्तिरपि ।

२६ संपइत्तिगाथया सांप्रतीनतीर्थं चतुर्थ्याश्रितमशुद्धचारीति पराशंका ।

२७ आगमविरुद्धेतिगाथया आगमविरुद्धचारि तीर्थं न भवेदिति ।

२८ तित्थपडीतिगाथया तीर्थप्रतिपक्षोऽर्हदादीनामपि प्रतिपक्ष एवेति ।

३० तित्थपडिइत्यादिगाथाद्विकेन स्तनिकः प्रतिसमयमनंतभवहेतुं कर्म्मार्जयति ।

३१ तेणेवत्तिगाथया लौकिकमिथ्यादृष्ट्यपेक्षया प्रतिसमयमनंतगुणक्लिष्टपरिणामः स्तनिकेत्यादि ।

३४ जो पुणेत्यादिगाथात्रिकेण पुस्तकात्तीर्थमुद्धृतमित्यादि परवचनं तन्निराकरणं च ।

३५ तम्हा तित्थेतिगाथया तीर्थे सति तीर्थादन्यत्र धर्म्मो न भवतीति तीर्थं च चतुर्थ्यामेव ।

३६ तव्वसठवियगाथया चतुर्मासकमपि चतुर्दश्यां पर्युषणा-
नुरोधात्पाऽऽज्ञमिति ।
३८ देसिअइत्यादिगाथाद्विकेन जैनप्रवचने पञ्च प्रतिक्रम
णानि, तेषु द्वे प्रतिक्रमणे रात्रिकदैवसिकरूपमे, मासि
तीर्थेऽनुकरणं तु पाक्षिकमात्रस्य, अंतिमप्रतिक्रमण-
त्रिकं तीर्थवत्सवादिषु, तीर्थानुकृतेरप्यभावात् ।
४० जेहिं चलिओ इत्यादिगाथाद्विकेन श्रमणकल्प तीर्थ-
पाम्यताऽस्वातम्या ।
४१ तेण महेतिगाथया येन कारणेन महता चिह्नेन तीर्थकराः
क्षान्तिकत्वेन कारणेन रामतीर्थेनापि वर्धमानाऽऽचा-
र्येण मलविशिष्टव्यवस्थापनरूपकस्यैव प्रकरणं कृतं,
तत्रान्येषां का वार्तेति, एवदृशो च अन्याचार्यकृतानां
हरिभद्रादीनां लेखो लिखितोऽस्तीति ।
४३ सम्मदर्शिगाथाद्विकेन शास्त्रोक्तमेकमपि वचनं संद

र्थ्यमानं चेतसि नामाति तस्य संपूर्णोनाप्यागमेन न
काचिदप्यर्थसिद्धिः, तत्र दृष्टान्तश्च ।
४४ एवमणुइतिगाथया तत्निकमतोच्छेदकमनुयोगद्वारमतं
शास्त्रं प्रदीपकल्प चक्षुष्मत एव प्रकाशकृत् ।
४७ तं पुण वीरेत्यादिगाथात्रिकेण भिन्नेत्यादिभिर्या पर्युषणा
तस्याः स्वरूपनिदर्शनम् ।
४८ तं पुण्णेत्यादिगाथया सर्वजनप्रसिद्धा पर्युषणा सा च
भाद्रपद एवेति समर्थनम् ।
४९ संपइचिगाथया पंचकहान्यादिकमपि व्युच्छिन्नं,सर्वमपि
संमति परमपञ्चक एवेति तात्पर्यम् ।
५० किंचागम इत्यादिगाथया तानिकस्य प्राबल्यस्वरूपमाह ।
५१ तं जेणमितिगाथाद्विकेन केन स्वरूपेण तीर्थवर्ती
सावधिविचारः ।
५२ तित्थ तुचिगाथया केन तीर्थकराः स्यात् तत्स्वरूप

भणनम् ।

५३ तम्हा इतिगाथया तीर्थाहितोत्सूत्रमार्गाश्रयणापेक्षयाऽन्यतीर्थिकमार्गाश्रयणं श्रेय इति समर्थनम् ।

५४ जह नामेतिगाथयाऽन्यतीर्थिकमार्गाश्रयणे दृष्टान्तः ।

५५ तेणेवत्तिगाथया सिद्धांतसम्मतिः ।

५६ पुण्णिमेत्यादिगाथया उक्तशेषोत्सूत्राण्यधिकृत्य तृतीयविश्रामोऽवलोकनीय इत्यतिदेशः ।

५७ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

५ इत्यांचलिकमतनिराकरणविश्रामबीजकम्

अथ सार्द्धपौर्णिमीयकमतनिराकरणविश्रामबीजकं लिख्यते

१ अह सड्डपुण्णिमीउत्तिगाथानवकेन सार्धपूर्णिमोत्पत्तिकालनामादिव्यतिकरः ।

१० कप्पवासेतिगाथया प्ररूपणोद्भावनं शेषप्ररूपणातिदेशश्च

१३ एवं कुवक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति ६ सार्धपूर्णिमामतविश्रामबीजकम्



अथागमिकमतनिराकरणविश्रामबीजकं

४ अह आगमिअइत्यादिगाथाचतुष्केण आगमिकमतोत्पत्तिकालमताकर्षकनामादिविचारः ।

७ तित्थयरोत्तिगाथया श्रुतदेवताविषयकपराशंका ।

८ इच्चाइत्तिगाथात्रिकेण पूर्व्वपक्षिणोक्तस्य निरासः ।

९ नणु सुअइतिगाथया श्रुतदेवता भवविरहादिकमसदेव कथं दास्यतीति पराशंका ।

१० नेवं निअमोत्तिगाथया स्वसत्तायां सदेव दीयते इत्येवंनियमाभावस्तत्र दृष्टान्तश्च ।

११ जो पुणत्तिगाथया यत्तु क्वापि नियमो दृश्यते तद् द्रव्यविषयो, न पुनर्भावविषयोऽपि ।

१४ दम्भाद दम्भविगाथात्रिकेण अगस्त्यस्या कार्यकरण निममनम् ।

१५ अप्पहविभाषया यथेकेनापि महता सर्व्वकार्य्यसिद्धिः साधर्हि अर्हन्नमस्कार एव कर्त्तव्यो, न पुनः सिद्धादीनामपि ।

१८ तेमिव दीसेत्यादिगाथात्रिकेण श्रुतदेवताराधनं फलवत्, तत्र दृष्टांतम् ।

१९ नणु सागपमितिगाथया त्रिस्तुतिकस्याशंका ।

२० इय चेइतिगाथया त्रिस्तुतिकस्य सिद्धांतानभिज्ञता ।

२१ जमसहायेतिगाथया श्रुतदेवतापेक्षापरायणत्रिस्तुतिको वराकः ।

२६ जं जक्खाइति गाथापंचकेन यक्षादिनिभाया निषेधेऽपि समर्थनप्रकारः, सिद्धांतसम्मतिश्च ।

२९ सुभसियेत्यादिगाथात्रिकेण यक्षादिनिभानिषेधेऽपि न श्रुतदेवताद्येत्रदेवतानिषेधः, किंतु तदाराधने जिनाज्ञा इत्यादिविचारः ।

३० न य किंचिदित्यादिगाथाद्विकेन प्रवचनमर्यादास्वरूप ।

३२ तेण भगवइत्तिगाथया प्रवचनविरोधभावेन त्रिस्तुतिकः कीदृश इत्याह ।

३३ एवं खलु तिरथुभईत्तिगाथया त्रिस्तुतिकमतस्य पूर्णिमा सदृश इत्यतिदेशः ।

३४ एवं कुपक्खेत्यादिगाथात्रिकेण विश्रामोपसंहारः ।

७ इत्यागमिकमतनिराकरणविश्रामबीजकम्

अथ लुंपकमतविश्रामबीजक लिख्यते

१२ अह पडिमेत्यादिगाथाद्वादशकेन लुंपकमते उपदेशचे यथोक्तस्वरूपम् ।

१९ एवं खलु अच्छेरमितिगाथाचतुष्टयेन लुंपकमतोत्पत्तावाद्यर्यसमर्थनम् ।

२३ आगमओ बलवंतेत्यादिगाथासप्तकेन आगमतोऽप्यागमव्यवहारिणामुपदेशो बलवान्, ततोऽपि कथंचिज्जिनप्रतिमाऽपि बलवतीति समर्थनम्।

२४ अह लुंपगस्सरूवमितिगाथया लुंपकमतविचारणाय चत्वारि द्वाराणि।

२९ णणु पुच्छामोत्तिगाथापंचकेन लुंपकस्वरूपविचारणम्।

३४ णणु तुम्हाणं धम्मेत्तिगाथापंचकेन लुंपकधर्म्मस्वरूपविचारणम्।

३८ गब्भयइत्थीइत्यादिगाथाचतुष्टयेन जगत्स्थितिमर्यादादृष्टान्तः।

४० तत्थवि किंचिइत्यादिगाथाद्वयेन यथा तीर्थेन मष्टव्यं तदाह।

४४ दोण्हंपि दो विगप्पाइत्यादिगाथाचतुष्टयेन विकल्पोद्भावनपुरस्सरं जगत्स्थितिविलोपप्रसंगः, पुरुषपरंपरा च श्रुतधर्म्महेतुः।

६० एअं उभयमणिट्ठमित्यादिगाथाषोडशकेन सिद्धांतेऽपि प्रतिमातो जिनधर्म्मप्राप्तिः, न पुनः क्वापि पुस्तकादपि धर्म्मप्राप्तिरिति विचारः।

६२ भोअणेत्यादिगाथाद्विकेन लिखितमात्रेण समीहितार्थसिद्धिर्न भवति, तेन लुंपकमते किं संपन्नम्?।

६४ तस्सुवएसोइतिगाथाद्विकेन निष्ठुरभाषात्मको लुंपकोपदेशस्तद्विकल्पितसिद्धांतसम्मतिः सव्वे पाणा० भूआ इत्यादि, तद्वृत्तौ च तदुद्भावितसम्मतेः सम्यग्विचारः

६८ एवं निठ्ठुरवयणमित्यादिगाथाचतुष्केण लुंपकोक्तनिष्ठुरभाषाया निराकरणम्।

७२ अह बहुवित्तेत्यादिगाथाचतुष्टयेन लुंपकमेव प्रश्नविषयीकृत्य लुंपकनिराकरणम्।

७८ से बेमि जे अतीआइत्यादिगाथाषट्केन से बेमि अतीया

षड्प्पन्ना अपामया इत्यादिसम्यक्त्वपराक्रमाध्ययनो-
देशकस पारमार्थिकार्थकथनम् ।

९१ नणु नइउचार इत्यादिगाथात्रयोदशकेन नघुचारे संस्था-
नियमादेस्तात्पर्यमयनेन लुंपकमतनिराकरणम् ।

९४ निमकप्पेइत्यादिगाथापंचकेन यथत् मतिपिढं तपदपर्म
एवेति पराकृतमूलनियमं निराकरोति ।

९७ नणु उवमरणा इत्यादिगाथया प्रतिवया लुंपकं दूषयति ।

९८ णणु उवगरणमितिमाथया ज्ञानादीनां मूलोपकरणानि ।

९९ नियनियकजेतिमाथया उपकरणमपि कथंचिदविकरणं
स्यात् ।

१०० एएण जिणपडिमेतिगाथया सिद्धांतजिनप्रतिमयोर्युग-
पदुत्पत्तौ लुंपकमतं निरस्तं स्यात् ।

१०१ जिणपडिमेत्यादिगाथात्रिकेण जिनप्रतिमासिद्धांतयो-
र्युगपदुत्पत्तौ परस्परं सापेक्षतामयनम् ।

१०७ असुहा अहो इत्यादिगाथाचतुष्टयेन साधुश्रावकयोरन्यो-
ऽन्यसापेक्षता ।

१०८ सिद्धांता इतिगाथया प्रतिमाविचारे क्रियमाणे सिद्धांत-
प्रतिमातीर्थानां क्रमेण बलवत्त्वम् ।

११५ सव्वं खलु इत्यादिगाथाष्टकेन सापेक्षतायां स्याद्वाद
रचनाप्रकारः ।

११९ एवं मय२ इत्यादिगाथात्रिकेण लुंपकमतं युक्त्या दूषयति ।

१२१ नणु जिणेत्यादिगाथाद्विकेन श्रावकधर्म्मेण कुपाक्षिक-
धर्म्मस्तुल्य इति परः शङ्कते ।

१२२ बीओ अणाइत्यादिगाथाद्वादशकेन श्रावककुपाक्षिक
योर्भूयोऽन्तरं दृष्टान्तपुरस्सरमाह ।

१३९ अह लुंपगेतिगाथाषट्केन लुंपकमतसिद्धांतस्वरूपं निरूप्य
तन्निराकरणम् ।

१४२ तित्य खलु इत्यादिगाथाचतुष्टयेन जैनसिद्धांतव्यवस्था-

पनाय प्रसंगतस्तीर्थस्वरूपस्यातिदेशमाह ।

१४५ एवं तित्थेत्यादिगाथाद्विकेन तीर्थसिद्धांतयोरन्योऽन्यं संगतिः ।

१४८ तेणेवेगंपि पयमितिगाथात्रिकेण प्रागुक्तस्य तात्पर्यं दर्शयन् जिनप्रवचने पदमात्रस्यापि व्याख्याने जिनप्रतिमाप्रासादप्रतिष्ठादिसिद्धिः, एतद्वृत्तौ च तदर्चनादिग्दर्शनम् ।

१५० अह भरहेत्यादिगाथाद्विकेन केन श्रावकेण प्रतिमा कारिता केन च साधुना प्रतिष्ठितेत्यादिविचारः ।

१५१ कज्ज कारणेतिगाथया कार्यं कारणजन्यमितिकृत्वा प्रतिमायाः सम्यक्त्वकारणत्वं दर्शयति ।

१५४ चेइअसहत्थेत्यादिगाथात्रिकेण सिंहावलोकनन्यायेन पुनरपि द्वाररचना ।

१५५ भगवइइतिगाथया चैत्यशब्देन प्रकृते जिनप्रतिमैव, न साधुर्नवाऽर्हन् इति सूत्रपाठत एवाह, एतद्वृत्तौ च सूत्रपाठेनापि ।

१५७ चेइअवंदणेत्यादिगाथाद्विकेन जिनप्रतिमानामुपयोगो नियतक्रियासु साधूनां श्रावकाणाञ्च ।

१५९ नाणानाणप्पमुहाइत्यादिगाथाद्विकेन आनंदादिश्रावकाणामुपधानवहनं, तद्वृत्तौ च सूत्रपाठोऽपि ।

१६१ संखेवेत्यादिगाथाद्विकेन सिद्धांते क्वचित् संक्षेपः क्वचिद् विस्तरः, तत्र विरोधो न भवतीति विचारः ।

१६२ अण्णहत्तिगाथया अन्यथाऽतिप्रसंग इति विचारः ।

१६३ सव्वक्कुवक्खुइतिगाथया श्रीमहानिशीथसूत्रं नव्वंकुपाक्षिकोच्छेदकं,अत एव तपागणस्यैव प्रामाण्यं, नेतरेषाम् ।

१७० लुंपगमित्तुइत्यादिगाथासप्तकेन लुंपकस्य हितोपदेशः ।

१७३ विश्रामोपसंहारः ।

इति ८ लुंपकमतनिराकरणविश्रामबीजकम्



## अथ कडुकमतबीजकं लिख्यते

२ अह कडुअपिगाथाद्विकेन कडुकमतोत्पत्तिकालादिनिदर्शनम्।

८ अम्हचेत्यादिगाथापट्केन कडुकोपदेशः।

१८ पयकुसयकसुइत्यादिगाथादशकेन कडुकमतनिराकरणयुक्तयः।

२१ ज पुण सरयत्रीत्यादिगाथात्रिकेण साधूनामभावे किं स्यादित्याह।

२२ जह बालिआ इत्यादिगाथया दृष्टान्तः।

२३ ज पुण जइपकिरिअपि संप्रति यथोक्तक्रियाकारिणः साधवो न संतीति दुर्व्वचनेन किं स्यादिति विचारः।

२५ जेणं जइपेत्यादिगाथाद्विकेन यथोक्तक्रियाकारिणः साधवः संप्रत्यपि संति, तत्र दृष्टान्तम्।

२८ पवमहेत्यादिगाथाद्विकेन कालानुभावेन साधुस्वरूपमाह

३४ सम्वेऽवि मुणिइत्यादिगाथासप्तकेन उत्तरपक्षसाधुनिभया धम्मं कुम्मं इति कदाग्रहनिराकरणयुक्तयः।

३८ संपुष्पमेसेत्यादिगाथाचतुष्टयेन कडुकमते देवगुरुधर्माणां परमाम्नातनेव, स्वरूपमाह।

३९ गिहिजिणेत्यादिगाथया कडुकमते क्षेपोत्सूत्राणामति देशमाह।

४२ एव कुवकसेत्यादिगाथात्रिकेण विश्रामोपसंहारः।

इति ९ कडुकमतनिराकरणविश्रामबीजकम्



## अथ बीजामतबीजकं लिख्यते

२ अह बीजमयपिगाथाद्विकेन बीजोत्पत्तिकालादि।

७ सोऽवि गओपिगाथापंचकेन तन्मतप्रवृत्तिहेतुः।

९ मुजसिचेत्यादिगाथाद्विकेन तदुपदेशनिराकरणम्।

१२ एवमित्यादिगाथात्रिकेण विश्रामोपसंहारः ।

इति १० बीजामतनिराकरणविश्रामबीजकम्



अथ पाशमतनिराकरणबीजकं लिख्यते

४ अह पासेत्यादिगाथाचतुष्टयेन उत्पत्तिकालनिमित्तादि-विचारः ।

९ सद्दहणेतिगाथया मताकर्षकस्य स्वरूपम् ।

१६ तस्सुवएसोइत्यादिगाथादशकेन पाशस्योपदेशस्वरूपम् ।

१७ जं पासेण येतिगाथया पाशोक्तमतं विचित्रं दर्शितम् ।

१८ चरिआणुवाएत्तिगाथया चरितानुवादस्वरूपमाह ।

२० धम्मोऽविअत्तिगाथाद्विकेन प्रागुक्तसमर्थनाय धर्म्मस्वरूपमाह ।

२१ एवं धम्मे इतिगाथया जिनाज्ञयैव धर्म्मो नान्यथेति समर्थनम् ।

२३ धम्मो खलु इत्यादिगाथाद्विकेन धर्म्ममात्रे जिनाज्ञैवेति व्यवस्थापना ।

२४ णाणस्सत्तिगाथया पाशोक्तमतविनाशाय ज्ञानादीनामाराधनास्वरूपं ।

२५ पोत्थाईतिगाथया ज्ञानाद्युपकरणानि ।

२६ उस्सग्गो इतिगाथया साधुश्रावकमार्गौ उत्सर्गापवादौ ।

३१ उस्सग्गो इत्यादिगाथापंचकेनोत्सर्गापवादयोर्नृपतिप्रजाज्ञातं, पथि विश्रामवदपवादः ।

४४ जो भणईत्यादिगाथात्रयोदशकेन जिनकल्पे उत्सर्गः जिनस्थविराणामाहारवन्निद्रावस्त्रादि चरणार्थमाज्ञया, न प्रमादता, सम्यग्दृष्टेरप्रमादः,देशविरतेरनारंभवन्न मुनेः प्रमादः ।

५८ एवमित्यादिगाथार्पचकेन द्रव्यस्तवादेराप्तत्वं ।
९८ एवमित्यादिगाथाषट्केन विधिवादादिनादिक्रमव्यवस्था
९९ आयेतिगाथया आदेशोपदेशाभे ।

९७ आदेस्यादिगाथाद्विकेनोपधानाद्यतिदेशः ।
९९ एवमित्यादिगाथाद्विकेनोपसंहारः ।

इति ११ पाशचन्द्रमतनिराकरणविश्रामबीजक

## इति प्रवचनपरीक्षाबीजकम् ।

## उत्तरार्धे साक्षिविशेषनामानि

अ

अकब्बरः २०४
अभयदेवसूरिः २४८
अरघट्टपाटकः १०–२१
अष्टापदः ८२ १६३-१८० १८९ १९३
अहम्मदावादः १०४
अहिच्छत्रा ८२–१८०

आ

आणंदविमलसूरिः २१४-२१५ २५०
आनंदः २१६-२१७-२१८ २५८
आमराजा ११
आर्द्रकुमारः ४६
आर्यसुहस्ती ११–१२
आशाधराचार्यः २१०–२७२

इ

इन्द्रनामः ५७

ई–ईशानेन्द्रः २१०

उ

उकेशः १०
उज्जयंतगिरिः ८२–१८०
उद्दायनः १८७
उमास्वातिः १८९–२४८

ऋ

ऋषभः २८-३३ ४२-११०
१११ १४१-१०४

# साक्षिग्रन्थनामानि

# साक्षिग्रन्थपाठादि

## उत्तरार्धानुक्रमः

